# स्वरभक्तिलक्षणपरिशिष्टा शिक्षा

अथातः सम्प्रवक्ष्यामि सर्वलक्षणलक्षिताम्
शिक्षां समासतस्तत्र स्वरांस्त्वष्टौ प्रकीर्त्तिताः १
तैरोविरामः क्षैप्रश्च तैरोव्यञ्जकस्तथा
भाव्योऽभिनिहितो जात्यः पादवृत्तश्च सप्तमः २
प्रश्लिष्ट इति विज्ञेयाः प्रोच्यन्ते लक्षणान्यथ
अवग्रह उदात्तश्चेत्स्वरितः स्यात्ततः परम् ३
अवग्रहात्पदं यस्तु तं विद्यात्प्रथमं स्वरम्
लक्ष्यमस्य तु विज्ञेयं गोपताविति गो । पतौ ४
इकारोकारयोः स्थाने यवौ स्यातामुदात्तयोः
अनुदात्ते पदे नित्यं स क्षिप्र इति कीर्त्तितः ५
त्र्यम्बकं द्व्रन्न इत्यादि लक्ष्यं ज्ञेयं विचक्षणैः
स्वरितं छन्दसि पदं यत्किञ्चिदपि दृश्यते ६
उदात्तपूर्वं तत्सर्व्वन्तैरोव्यञ्जन उच्यते
इडेरन्ते तथा हव्ये काम्ये इत्यादि दर्शनम् ७

अकार एकोदात्तेन रेफेणापह्नतो भवेत्
तञ्चा भिनिहितं प्राहुः कुक्कुटोऽसि निदर्शनम् ८
विवृत्त्या दृश्यते यत्र स्वरं च स्वरितं पदे
स स्वरः पादवृत्तः स्यात्पुत्र ईधे निदर्शनम् ९
यत्रोदात्त इकारो हि निपातैकारसँय्युतः
स प्रश्लिष्ट इति ज्ञेयोऽभीममित्यादि दर्शनम् १०
सादौ पदे परे पूर्वं ककारान्ते पदे स्थिते
कसवर्णं तु विज्ञेयं भिषक्सीसेन दर्शनम् ११
चकारान्ते पदे तान्ते पूर्वं च समवस्थिते
प्रत्यारम्भो न तत्र स्याद्यच्चाहमिति दर्शनम् १२
सादौ पदे परे पूर्वं ङकारान्ते पदे सति
कसवर्णद्वयं तत्र प्राङ्क्सोम इति दर्शनम् १३
सादौ पदे परे नान्ते पूर्वे च समविस्थिते
तसवर्णं विजानीयात्त्रीन्त्समुद्द्रान्निदर्शनम् १४
मादौ पदे परे मान्ते पूर्वमुच्चारिते सति
मसवर्णन्तु तत्र स्यादिमम्म इति दर्शनम् १५
पदमध्ये पदाद्यन्त ऋहरेफैश्च संयुते
यकारे जं विजानीयाद्युञ्जानेत्यादिकं यथा १६
टवर्गमन्तरा षस्य खोच्चारम्छन्दसीरितः
प्रत्युदाहरणं पृष्टो दिवीषे त्त्वा निदर्शनम् १७

ऊष्मोर्ध्वरेफस्योच्चारः सैकारो हल्युतो न चेत्
पितृणामिह पित्रेणामित्यादि च निदर्शनम् १८
अं कारः स्यादनुस्वारस्थाने शलि च रे परे
ह्रस्वाद्दीर्घो भवेद्दीर्घाद्ध्रस्वो गुरुरथो मतः १९
सँय्योगे परतो हंस इत्यादि निदर्शनम्
ताँ सवितुरित्यादि दँष्ट्रेत्यादिकं तथा २०
ह्रस्वदीर्घगुरूच्चारः कर्त्तव्योऽत्र यथाक्रमम्
शल् रेफयोरभावेन सिंही प्रत्युदाहृतिः २१
शरेः परे या नु दिती द्विर्भवेद्रेफभागिनाम्
विसर्गाच्च परे यां ऋकारहीनां निदर्शनम् २२
अस्कन्नमद्य कस्याश्चित्कृष्णोऽस्या इति च क्रमात्
सूर्यस्त्वाद्यौष्पिता चाथ दधात्वस्मानिति क्रमात् २३
बृहन्तः प्रस्तरेष्ट्वेति पुनः क्क्रत्वे निदर्शनम्
पाणिनीयस्य सूत्राभ्यां द्वित्त्वं सर्वत्र कीर्त्तितम् २४
यवयोः परयोः सस्य द्वित्त्वं न स्यात्तु छन्दसि
व्वसवस्त्वा धूपयन्तु तस्य योनिं यथायथम् २५
हल्युक्त ऋकारस्तु रेकारश्छन्दसि स्मृतः
पितणामिति पित्रेणामित्यादि च निदर्शनम् २६
ह्रस्वं दीर्घं भवेत्किञ्चित्संहिताविषये स्वके
हल्विसर्गयुते वर्णा हल्युतायुतके च न २७

सपक्त्नान्यदध्वमग्घ्न्येति किञ्चिद्दीर्घो भवेदिह
भागम्प्रजावतीत्यादौ ह्रस्वता न तु दीर्घता २८
हल्युताकारसँय्योगादिति ज्ञेयं विचक्षणैः
इति कात्यायनपरिशिष्टे वर्णोच्चारप्रकारः
सन्ध्यश्चतुर्धा विज्ञेया लोपागमविकारतः २९
प्रकृत्त्या च तथा तत्र प्रथमं हि निदर्शनम्
विकारतो यथा चेदं प्रेषितेत्यादिकं भवेत् ३०
देवो वः सवितेत्यादौ प्रकृत्त्यादिप्रदर्शनम्
उभौ स्वरौ तयोरन्तः सन्धिर्यत्र न दृश्यते ३१
सा विवृत्तिर्बुधैर्ज्ञेया स एवेति च पश्यति
एषा चतुर्धा विज्ञेया प्रथमा तु पिपीलिका ३२
परा पाकवती चैव तथा वत्सानुसारिणी
वत्सानुत्सृजिता चैव चतस्रस्ता विवृत्तयः ३३
पिपीलिकाद्यन्तदीर्घा नाब्भ्यासीन्निदर्शनम्
द्वितीया तूभया ह्रस्वा व्विन इन्द्रेति दर्शनम् ३४
तृतीया चोदिता दीर्घा तास्येति निदर्शनम्
अन्ते चतुर्थी दीर्घा स्यात्तानावोढमश्विना ३५
स्वरभक्तिः पञ्चधा स्यात्तत्राद्या करिणी स्मृता
लकारेण हकारेण सँय्योगो यत्र दृश्यते ३६
करिणी सा तु विज्ञेया वर्हिरसीति दर्शनम्

लकारेण हकारेण सँय्योगो यत्र दृश्यते ३७
कुर्विणी सा हि विज्ञेया उपवल्हेति पश्यति
रकारस्य शकारेण सँय्योगो यत्र दृश्यते ३८
हरिणी सा तु विज्ञेयार्शस इत्यादि दर्शनम्
लकारेण शकारेण सँय्योगो यत्र जायते ३९
तां हरिणीं विजानीयाच्छतवल्शेति दर्शनम्
रेफस्याथ षकारेण सँय्योगो यत्र दृश्यते ४०
हंसपादेति विज्ञेया वर्षो वर्षीयसीति च
एतल्लक्षणमाख्यातं स्वरभक्तेर्विचक्षणैः ४१
ज्ञात्वैतन्मनुजो याति ब्रह्मलोकं सनातनम्
इति कात्त्यायनेनैव परिशिष्टं कृतं मुदा ४२

इति कात्यायनोक्ता
स्वरभक्तिलक्षणपरिशिष्टशिक्षा समप्ता